# ...द्धिपत्रम् ।

| पत्राङ्काः | श्लोकाङ्काः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| २ | १४ | मेदिनीकर | मेदिनिकर |
| ४ | ३७ | पंसि | पुंसि |
| २५ | १२५ | श्लोक | श्लोक |
| ५७ | ३२ | वरण्ड | बरण्ड |
| " | " | वारुण्डी | बारुण्डी |
| ५८ | २ | प्रगाढ | प्रगाढे |
| ६५ | ६२ | पच्चिणौ | पच्चिणी |
| ६८ | ८७ | हरितायाच्च | हरितायाश्च |
| ६९ | १०० | पर्व्वरीस्तु पर्व्वणि | पर्व्वरीणन्तु पर्व्वणिं |
| ७२ | १४ | पादादितो | पदोदिते |
| ७४ | ३४ | पोतं | पीतं |
| ७५ | ४४ | मोचने | मोचणे |
| ७८ | ७३ | स्युतिः | स्यूतिः |
| ८० | ९२ | आस्फोता | आस्फोता |
| ८९ | १८३ | पूर्णिमाणुच्चयोरपि | पूर्णिमानुच्चयोरपि |
| " | १८९ | सेबायामपि | सेवायामपि |
| ९३ | २२० | अनीकाविक्तते | अनीकाधिकृते |
| ९६ | १६ | ग्रोभसि | ग्रोफसि |
| " | २२ | ब्राह्मनी | ब्राह्मी |

| पत्राङ्काः | श्लोकाङ्काः | अशुद्धानि | |
|---|---|---|---|
| ९७ | ३६ | ब्रह्मणे | ब्राह्मणे |
| " | १ | स्मतः | स्मृतः |
| ९८ | ६ | घ्राणदौ | घ्राणादौ |
| " | ११ | अन्द्रं | अद्रं |
| " | १३ | च।नास्य | चाभाग्य |
| १०२ | ४८ | पश्चौ | पश्चौ च |
| १०३ | ३ | चत्त्हीने | चक्षुर्हीने |
| १०४ | १५ | सा | ना |
| १०५ | २८ | प्रम्नरलङ्कार | प्रेम्नरलङ्कार |
| १०६ | ३० | उपाधिः | उपधिः |
| " | ३२ | न्यगोधस्तु | न्यग्रोधस्तु |
| १०७ | ४१ | दोषात्पादे | दोषोत्पादे |
| " | ४८ | समुनद्धः | समुन्नद्धः |
| " | " | पण्डितन्मन्य | पण्डितम्मन्य |
| १०८ | ७ | जीर्णौ | जीर्णौ |
| १११ | ३४ | कफोणावथथा | कफोणावप्यथा |
| " | ३६ | कुत्सित | कुत्सिते |
| ११२ | ४९ | अम्रुकेशरे | अभ्रुकेशरे |
| | ५२ | दम्भचर्य्यायायीर्य्यालौ | [illegible]चर्य्यायामीर्य्यालौ |
| | ५८ | ग्रामीनः | ग्रामीणः |
| ११४ | ७१ | वह्नि | वह्नि |

| पत्राङ्काः | श्लोकाङ्काः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| ११५ | ७४ | दण्डे | दन्ते |
| ११७ | ६८ | सेनासना | सेना |
| ११८ | १०७ | माष्टौ | माष्टौँ |
| ११६ | ११५ | नीलि | नीली |
| " | ११७ | प्रभ च | प्रभौ च |
| " | १२१ | चारीभेद | नारीभेद |
| १२० | १२५ | वुर्त्तनो | वर्त्तनो |
| " | १२६ | अङ्कोटदच्चेथ | अङ्कोटदचेऽथ |
| " | १३२ | विक्लीन्नो | विक्लिन्नो |
| १२२ | १५१ | क्लीवसपुरच्चण | क्लीवसुपरच्चण |
| " | १५५ | पुंसिवने | पुंसवने |
| " | " | यज्ञकर्म्मेन्ते | यज्ञकर्म्मान्ते |
| १२३ | १५६ | सीवने | सीवनो |
| १२४ | १७४ | रज्वावुद्वाह्निनो | रज्जावुद्वाह्निनी |
| १२७ | २०४ | जराव्याधिजितोषधे | जराव्याधिजिदौषधे |
| " | २०७ | लाङ्गली | लाङ्गली |
| १३० | २३० | आन्नाते | आम्नाते |
| १३२ | २५२ | मर्द्दनः | मर्दनः |
| १३३ | ७ | ताप | तापः |
| " | " | कस्तूर्त्याम् | कस्तूर्य्याम् |
| " | १२ | स्रवे | स्रुवे |

| पत्राङ्काः | श्लोकाङ्काः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| १३६ | १ | निष्फलभासयो | निष्फलभाषणे |
| १४१ | २५ | स्तम्भ | स्तम्भ |
| " | २ | रुक्तङ्गिदो | रुक्तङ्गिदोः |
| १४३ | १६ | अहिंसोपनिषन्याये | अहिंसोपनिषन्नराये |
| " | १८ | प्रकारे | प्राकारे |
| १४४ | २८ | लच्मी | लच्मीः |
| १४८ | ७ | मद्याघ्रमध्ययोः | मद्याघ्रमध्ययोः |
| १४६ | १० | मध्येभवन्धने | मध्येभबन्धने |
| " | १६ | विद्दिष्टकार्य्ययोः | विद्विष्टकार्य्ययोः |
| १५० | २२ | चित्ता | चित्या |
| १५१ | ३४ | मतते | सतते |
| १५२ | ४२ | शुभाशुभकर्म्मणोः | शुभाशुभकर्म्मणोः |
| १५८ | ११० | पृष्वस्थायी बले | पृष्ठस्थायिबले |
| १५६ | ११२ | सरन्युः | सरण्युः |
| " | ११५ | पुंस्यकयम् | पुंस्त्ययम् |
| " | १२० | दक्षिणादिङ्भवे | दक्षिणादिग्भवे |
| १६० | १२६ | स्वाद् | स्याद् |
| १६२ | ६ | नगनेधातुभेदे | गगने धातुभेदे च |
| " | ८ | भैदे | भैदे |
| " | " | भेदे | भेद |
| १६४ | ३० | धोरो | घोरो |

| पत्राङ्काः | श्लोकाङ्काः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| १६८ | ६५ | रुटभेदे | पुटभेदे |
| " | ६६ | गल | गज |
| १६८ | ६७ | बाग् | वाग् |
| १७० | ९४ | दध्यघ्र | दध्यग्र |
| १७१ | १०० | अंसौ | अंशौ |
| " | १११ | द्यूतादिफङ्गयोः | द्यूतादिभङ्गयोः |
| १७३ | ११६ | जठरं | जठरे |
| " | १२० | अण्यलिङ्गं | अन्यलिङ्गं |
| १७४ | १२९ | कङ्वरं | कच्चरं |
| १७५ | १३९ | वरुणाद्रौ | वरुणद्रौ |
| १७६ | १४८ | कर्णिकाराद्रौ | कर्णिकारद्रौ |
| " | १५० | मुस्तकुऽपि | मुस्तकेऽपि |
| १७८ | १७४ | धान्यस | धान्यस्य |
| १७९ | १८६ | तूर्य्यवक्रे | तूर्य्यवक्त्रे |
| १८० | १९० | वल्ली | वल्लौ |
| १८२ | २०८ | हस्तिपिप्पल्यौः | हस्तिपिप्पल्योः |
| " | २११ | मांसु | मांस |
| १८३ | २२५ | स्पूकघ्रिण्यां | स्पूकघ्रिम्ब्यां |
| १८४ | २२९ | रन्ध्रन्विते | रन्ध्रान्विते |
| " | २३० | मण्डले | मण्डने |
| " | २३२ | सङ्करी | सङ्कारी |

| पत्राङ्काः | श्लोकाङ्काः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| १८५ | २३८ | स्वव | स्ववश |
| " | २४० | हिरण्डीर | हिरण्डीरः |
| १८८ | २७० | धृतराष्ट्रः | धार्त्तराष्ट्रः |
| " | २७१ | धृतराष्ट्रः | धृतराष्ट्रः |
| " | " | धृतराष्ट्री | धृतराष्ट्री |
| १९० | २९० | ऋषभाखौषधे | ऋषभाख्यौषधे |
| १९१ | ३०६ | वस्त्रौकसारा | वस्वौकसारा |
| १९२ | १ | लीः | ली |
| १९३ | १८ | थन्यवत् | ऽप्यन्यवत् |
| १९७ | ५४ | शूल्या | शूला |
| २०० | ९० | चूढ़ाला | चूड़ाला |
| २०३ | १२६ | चाटिकाद्वये | चोटिकाद्वये |
| २०६ | १५२ | कुतूहल | कुतूहलं |
| " | १५८ | पांशुवष | पांशुवर्षे |
| २०७ | १५९ | प्रथमान्तरे | प्रमथान्तरे |
| २०९ | १० | द्वावादावौ | द्वदावौ |
| २१५ | ६ | केशो | कोशो |
| २१६ | १२ | पक्त | पक्व |
| " | १२ | पीखडाम् | पीखडाम् |
| " | १६ | स्पर्शः | स्पशः |
| २१९ | ५ | उषः | ऊषः |

| पत्राङ्काः | श्लोकाङ्काः | अशुद्धानि | शुद्धानि |
|---|---|---|---|
| २२० | ११ | ध्वनि | ध्वनि |
| २२८ | ३१ | हर्पयोः | हर्षयोः |
| १३३ | १० | व्यहः | व्यूहः |
| २३३ | १५ | शूते | सूते |
| २३६ | ४ | रोषत्क्यो: | रोषोत्क्योः |
| २३७ | ८ | स्मता | स्मृता |
| २४० | ३० | कात्र्स्न्य | कार्त्स्न्यं |
| २४२ | ४६ | परङ्गता | परङ्गतौ |
| २४३ | ५५ | सज्ञाय | सज्ञायै |
| २४६ | ८२ | अन्तर्द्धा | अन्तर्द्धौ |
| " | " | श्वैर | स्वैर |
| " | ८५ | पादूरणे | पादपूरणे |

∴ क्वचित् क्वचित् विभिन्नवृत्तयोरेकत्र समाश्लेषो द्रष्टव्यः। स च परिगणनासौकर्य्यात् सहनीयः।

---

# ॥ मेदिनी ॥

---

## ओं नमो गणेशाय।

कृपाङ्काय नमस्तस्मै यस्य मौलिविलम्बिनी।
जटावेष्टनजां शोभां विभावयति जाह्नवी ॥ १ ॥
पातु वो मदकालिम्ना धवलिम्ना रदस्य च।
गङ्गायमुनयोः सङ्गं वहन्निव गजाननः ॥ २ ॥
पूर्व्वाचार्य्यकृती वीक्ष्य शब्दशास्त्रं निरूप्य च।
नानार्थशब्दकोषोऽयं लिङ्गभेदेन कथ्यते ॥ ३ ॥
प्रायशो रूपभेदेन विशेषणवशात् क्वचित्।
स्त्रीपुंनपुंसकं ज्ञेयं विशेषोक्तेश्च कुत्रचित् ॥ ४ ॥
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने च द्वयोरिति।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्व्वभाक् ॥ ५ ॥
रूपाद्युक्तं लिङ्गमुक्तं त्रिपिस्त्रान्त्रिच्छिदे क्वचित्।
विशेष्यनिघ्नेऽनुक्तेऽपि विज्ञेया वाच्यलिङ्गता ॥ ६ ॥
गुणे शुक्लादिकद्याद्याः पुंसि स्युस्तद्वति त्रिषु।
तीक्ष्णाद्यास्तु गुणे क्लीवे गुणिलिङ्गास्तु तद्वति ॥ ७ ॥
क्लीवपुंसोरपि स्त्रीत्वं क्वाप्यल्पत्वविवक्षया।
जातिवाचकशब्दानामपि तत् स्त्रीविवक्षया ॥ ८ ॥

उद्भिदः प्रसवे क्लीवे हरीत[illegible]ः स्त्रियाम् ।
रवल्मीकद
पुष्पे जातीप्रभृतयः स्वलिं[illegible]ः फले ॥ ९ ॥
प्राङ् नानार्थोऽन्तु तल्लिङ्गं द्वयोर्द्वन्द्वे न चैकता ।
शब्दावृत्ति र्न लिङ्गैक्ये सप्तमी न विशेषणे ॥ १० ॥
क्लीवे नपुंसके पुंसि स्त्रियां योषिति च द्वयोः ।
त्रिषु चेत्यादि यद्रूपं तल्लिङ्गस्यैव वाचकम् ॥ ११ ॥
नानार्थः प्रथमान्तोऽत्र सर्व्वत्रादौ प्रदर्शितः ।
सप्तम्यन्तोऽभिधेयेषु वर्त्तमानो विनिश्चितः ॥१२॥
एकद्वित्रिचतुष्पञ्चषड्वर्णानुक्रमात् कृतः ।
स्वरकाद्यादि-काद्यन्त-वर्गै र्नानार्थसंग्रहः ॥ १३ ॥
नानार्थकोषपुस्तकभावार्ज्जनदुःखहानये कृतिनः ।
मेदिनीकरकृतकोषो विशुद्धलिङ्गोऽभिलिख्यतामेकः ॥१४॥

## कैककम्

को ब्रह्म[illegible]ीरालयमदद्येषु भास्करे ।
का[illegible] चक्रिणि च पतत्रिणि च पार्थिवे ॥ १५ ॥
मयूरेऽग्नौ च पुंसि स्यात् सुखशीर्षजलेषु कम् ।

## कद्विकम्

अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ ॥ १६ ॥
अङ्को रूपक*भेदागश्चिह्नरेखाजिभूषणे ।

---

२ रूपकभेदो दृश्यकाव्यविशेषः । आगः अपराधः ।

रूपकांशान्तिकोत्सङ्गे स्यानेऽकं * पापदुःखयोः ॥ १७ ॥
एकः सङ्ख्यान्तरे श्रेष्ठे केवले स्त्री त्रिषु ।
कर्कः कर्के † तले वह्नौ शुक्लाश्वे दर्पणे घटे । १८ ॥
कङ्कस्तु द्विजे ख्यातो लोहपृष्ठकृतान्तयोः ।
कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके ॥ १९ ॥
विटकिट्टयोश्च पापे त्रिषु पापाशये पुनः ।
काकः स्याद् वायसे दृव्यभेदे पोडसर्पिणि ॥ २० ॥
शिरोऽवक्षालने मानप्रभेद-द्वीपभेदयोः ।
काका स्यात् काकनासायां काकोली-काकजङ्घयोः ॥२१॥
रक्तिकायां मलपूश्च काकमाच्याश्च योषिति ।
काकं सुरतबन्धे स्यात् काकानामपि संहतौ ॥ २२ ॥
किष्कुर्द्वयो वितस्तौ च सप्रकोष्ठकरेऽपि च ।
कोकश्चक्र-वृक-ज्येष्टी-खर्जूरीद्रुम-दर्दुरे ॥ २३ ॥
छेको गृहाश्रित-मृगपक्षिणो नागरे त्रिषु ।
टङ्को नीलकपित्थे च खनित्रे टङ्कणेऽस्त्रियाम् ॥ २४ ॥
जङ्घायां स्त्री पुमान् कोषे कोपासिग्राव
तर्कः काङ्क्षावितर्कोहहेतुशास्त्रेषु कथ्यते ॥ २५
त्रिका कूपस्य नेमौ स्यात् त्रिकं पृष्ठाधरे त्रये ।
तोकं पुत्रे सुतायाञ्च द्विकः स्यात् काककोकयोः ॥२६॥

---

* क्वचित् पुंलिङ्गता च दृश्यते ।

† कर्कः कर्कटवृक्षः ।

न्यङ्कुर्मुनौ मृगे पुंसि नाकस्तु त्रिदिवेऽम्बरे ।
नाकुर्मुन्यन्तरे पृथ्वीधरवल्मीकयोः पुमान् ॥ २७ ॥
निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः ।
वक्षोऽलङ्करणे हेममात्रे हेमपलेऽपि च ॥ २८ ॥
पङ्कोऽस्त्री कर्द्दमे पापे पाकः परिणतौ शिशौ ।
केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च ॥ २९ ॥
बकस्तु बकपुष्पे स्यात् कह्वे श्रीदे च रक्षसि ।
भूकं छिद्रे च काले च भेको मण्डूकमेघयोः ॥ ३० ॥
मुष्को मोक्षकवृक्षे स्यात् सङ्घाते वृषणेऽपि च ।
मूकस्त्ववाचि ना दैत्ये रङ्कः कृपणमन्दयोः ॥ ३१ ॥
राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् ।
सम्पूर्णेन्दुतिथौ रेकः शङ्कानीचविरेचने ॥ ३२ ॥
रोकस्तु क्रयभिद्दीप्त्योः रोकं नावि चले बिले ।
लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च ॥ ३३ ॥
लोको जनेऽपि भुवने वल्कं वल्कलशल्कयोः ।
वङ्कः पर्य्याणभागे ना नदीपाले च भङ्गुरे ॥ ३४ ॥
शल्कन्तु शकले वल्के शको जात्यन्तरे नृपे ।
शङ्कुः सङ्ख्यास्त्रयादोभित्कीलेशकलुषेषु ना ॥ ३५ ॥
शङ्का त्रासे वितर्के च शाका द्वीपान्तरेऽपि च ।
शाको द्रुमविशेषे च पुमान् हरितकेऽस्त्रियाम् ॥ ३६ ॥
शुको व्यासस्तुते कीरे रावणस्य च मन्त्रिणि ।
शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् ॥ ३७ ॥

शुल्कं घट्टादिदेये स्याद् वरादर्थग्रहेऽस्त्रियाम् ।
शूकोऽस्त्री शुङ्गदययोः श्लोकः पद्ये यशस्यपि ॥ ३८ ॥
शौकं शुकगणे स्त्रीणां करणे सूक्त इत्ययम् ।
वाणवातोत्पले स्तोकं त्रिष्वल्पे चातके पुमान् ॥ ३९ ॥

## कत्रिकम्

अशोक स्त्रिषु निःशोके पुंसि कङ्केल्लिपादपे ।
स्त्रियान्तु कटुरोहिण्यां पारदे स्यान् नपुंसकम् ॥ ४० ॥
अलका कुवेरपुर्य्यामस्त्रियां चूर्णकुन्तले ।
अभीकः कामुके क्रूरे निर्भये त्रिषु ना कवौ ॥ ४१ ॥
अनीकोऽस्त्री रणे सैन्येऽप्यणुको निपुणाल्पयोः ।
अलीकमप्रियेऽपि स्याद् दिव्यसत्ये नपुंसकम् ॥ ४२ ॥
अनूकन्तु कुले शीले पुंसि स्याद् गतजन्मनि ।
अंशुकं श्लक्ष्णवस्त्रे स्याद् वस्त्रमात्रोत्तरीययोः ॥ ४३ ॥
अन्तिकं निकटे वाच्यलिङ्गं स्त्री शातलौषधौ ।
चुल्ल्यां ज्येष्ठभगिन्याश्च नाट्योक्त्या कथ्यतेऽन्तिका ॥ ४४ ॥
अलर्को धवलार्के स्याद् योगोन्मादितकुक्कुरे ।
अम्बिका पार्वतीमात्रो धृतराष्ट्रस्य मातरि ॥ ४५ ॥
अम्बिका द्यूतभेदे च रजन्यामपि योषिति ।
अम्लिका तिन्तिड़िकाऽम्लोद्गारचाङ्गेरिकासु च ॥ ४६ ॥
अर्भकः [illegible]थितो बाले मूर्खेऽपि च कृशेऽपि च ॥
आमकः पटहे भेर्य्यां मृदङ्गे ध्वनदम्बुदे ॥ ४७ ॥

नर्त्तकी लासिकायाञ्च करेण्वामपि योषिति ॥
नग्निकाऽपि कुमार्य्यां स्यात् पुमान् क्षपणवन्दिनोः ॥१०८॥
नरकः पुंसि निरयदेवारातिप्रभेदयोः ।
नन्दको हरिखड्गे च हर्षके कुलपालके ॥ १०६ ॥
नालीकः शरशल्यास्त्रेऽप्यब्जषण्डे नपुंसकम् ।
नायको नेतरि श्रेष्ठे हारमध्यमणावपि ॥ ११० ॥
निर्म्मोको मोचने व्योम्नि सन्नाहे सर्पकञ्चुके ।
नीलिका नीलिनी-क्षुद्ररोग-सेफालिकासु च ॥ १११ ॥
पराकस्तु व्रते खड्गे प्रसेकः सेचने च्युतौ ।
प्रतीकोऽवयवेऽपि स्यात् प्रतिकूलविलोमयोः ॥ ११२ ॥
पद्मकं स्यात् पद्मकाष्ठविन्दुजालकयोरपि † ।
पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके ॥ ११३ ॥
पल्यङ्को मञ्चपर्य्यङ्कप्लवीपर्य्यस्तिकासु च ।
पताका वैजयन्त्याञ्च सौभाग्यनाटकाङ्कयोः ॥ ११४ ॥
पातुकः पतयालौ स्यात् प्रपातजलहस्तिनोः ।
प्राणकः सत्वजातीये जीवकद्रुमचोलयोः ॥ ११५ ॥
पाटकः स्यान्महाकिष्कौ कटकान्तरवाद्ययोः
अक्षादिचालने मूलद्रव्यापचयवेधसोः ॥ ११६ ॥
पालङ्कः शल्लकीशाकभेदयोः प्राजिपक्षिणि ।
पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके ॥ ११७ ॥

---

† जालकं करिकरमुखस्थितविन्दुसमूहः।

भल्लातके विडङ्गे च प्रियकः पीतशालके।
नीपे चित्रमृगे चालौ प्रियङ्गौ कुङ्कुमेऽपि च ॥ ११८ ॥
पिण्याकोऽस्त्री तिलकल्के हिङ्गुवाह्लीकसिह्लके।
पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः ॥ ११९ ॥
पिटकस्त्रिषु विस्फोटे मञ्जूषायां पुनः पुमान्।
पिष्टको घृतपूपादौ नेत्ररोगान्तरेऽपि च ॥ १२० ॥
पुलकः क्रिमिभेदे प्रस्तरभेदे च मणिदोषे।
रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धर्वे ॥ १२१ ॥
पुलाकस्तुच्छधान्ये स्यात् सङ्क्षेपे भक्तसिक्थके।
पुष्पकं रीतिका-* नेत्ररोगयो रत्नकङ्कणे ॥ १२२ ॥
कुवेरस्य विमाने च काशीशे† च रसाञ्जने।
लौहकांस्ये मृदङ्गारशकव्यां च नपुंसकम् ॥ १२३ ॥
स्यात् पुत्रिका पुत्तलिकादुहित्रोर्यावतूलके।
ना पुत्रे शरभे धूर्त्ते शैलदृक्षप्रभेदयोः ॥ १२४ ॥
पूर्णकः स्वर्णचूडे स्यात् नासाछिन्नरान्तु पूर्णिका।
पृदाकु र्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान् ॥ १२५ ॥
पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्।
पेचको गजलाङ्गूलमूलोपान्ते च कौशिके। १२६ ॥
पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके।
वल्मीको रोगभेदे च नाकौ च पुन्नपुंसकम् ॥ १२७ ॥

---

* रीतिका पित्तलम्।

† काशीशं उपधातुविशेषः।

रालकं पञ्चराले ना वेश्यावेश्मादूत्वासिनि ।
रुचको वीजपूरे * च निष्के दन्तकपोतयोः ॥ १४६ ॥
न द्वयोः सर्ज्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः ।
सौर्व्वचलेऽपि माङ्गल्यद्रव्ये चाप्युत्कटेऽपि च ॥ १४७ ॥
रुण्डिका द्वारपीण्डयाञ्च दूतिकायां रणक्षितौ ।
रूपकं नाटके मूर्त्तौ काव्यालङ्करणेऽपि च ॥ १४८ ॥
रेणुकापि हरेणौ † च जामदग्न्यस्य मातरि ।
* लम्पाको लम्पटे देशे लासको लास्यकारिणि ॥ १४९ ॥
मयूरे लसके चाथ लूणको भिदिते पशौ ।
लोचको मांसपिण्डेऽक्षितारकायाञ्च कज्जले ॥ १५० ॥
ललाटाभरणे स्त्रीणां कदलीनीलवस्त्रयोः ।
निर्व्वृत्तौ कर्णपूरे च मौर्व्वयां श्लथचर्म्मणि ॥ १५१ ॥
वसुकं रौमके पुंसि शिवमल्लार्कपर्णयोः ।
वर्णकश्चारणे स्त्री तु चन्दने च विलेपणे ॥ १५२ ॥
द्वयो नील्यादिषु स्त्री स्यादुत्कर्षे काञ्चनस्य च ।
वर्त्तकस्तु खुरेऽश्वस्य विहगे वर्त्तिका द्वयोः ॥ १५३ ॥
वञ्चकस्तु खले धूर्त्ते गृहवभ्रौ च जम्बुके ।
व्यलीकमप्रियाकार्य्यवैलक्ष्येष्वपि पीडने ॥ १५४ ॥
ना नागरेऽथ वाह्लीकं वाह्लिकं धीर-† हिङ्गुनोः ।
द्वावेतौ पुंसि देशस्य प्रभेदे तुरगान्तरे ॥ १५५ ॥

---

* वीजपूरः फलपूरः 'नेबू' इति भाषा । † हरेणुः गन्धद्रव्यविशेषः ।
* रोहकः प्रेतभेदे ना रोहरि त्रिषु विश्रुत इति श्लोकार्द्धं क्वचिद् दृश्यते ।

वार्द्धकं वृद्धसङ्घाते वृद्धस्य भावकर्म्मणोः ।
वार्षिकं त्रायमाणायां * क्लीबे वर्षाभवे त्रिषु ॥१५६॥
बालकोऽस्त्री पारिहार्य्ये † त्रिषु स्यादङ्गुरीयके ।
वितर्कस्तु पुमानूहे संशये च निगद्यते ॥१५७॥
विपाकः पचने स्वेदे कर्म्मणो विसदृक्फले ।
विवेकः स्याज् जलद्रोण्यां पृथग्भावविचारयोः ॥१५८॥
वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः ।
वृषाङ्कः शङ्करे साधौ भल्लातकमहोच्चयोः ॥१५९॥
वैजिकं शिग्रुतैले स्याद् हेतौ सद्योऽङ्कुरे तु ना ।
शलाका शल्यमदनशारिकाशल्लकीषु च ॥१६०॥
छत्रादिकाष्ठीशरयोः शल्लकी पशुवृक्षयोः ।
शम्बूको गजकुम्भाग्रे घोङ्गे च शूद्रतापसे ॥१६१॥
जलजन्तुविशेषे च शम्बूका न नपुंसके ।
शङ्ककं बलये कम्बावस्त्री पुंसि शिरोरुजि ॥१६२॥
शार्करः स्याद् दुग्धफेनशर्करापिण्डयोः पुमान् ।
शिशुकः शिशुमारे स्याद् बालकोलुपिनोरपि ॥१६३॥
शीतकः शीतकाले च सुस्थिते दीर्घसूत्रिणि ।
शूकरः प्रावटेऽपि स्याद् रसेऽपि परिकीर्त्तितः ॥१६४॥
सस्यको मणिभेदोऽसौ सम्पर्को मेलके रतौ ।
सम्पाक स्तार्किके धृष्टे त्रिषु ना चतुरङ्गुले‡ ॥१६५॥

---

* त्रायमाणा, ओषधिविशेषः । † पारिहार्य्यो वलयः ।

‡ चतुरङ्गुल आरग्वधवृक्षः ।

स्यमीका नीलिकायां स्त्री स्यमीको नाकुवृक्षयोः ।
स्वस्तिको मङ्गलद्रव्ये चतुष्क-*गृहभेदयोः ॥१६६॥
सरकोऽस्त्री सीधुपाने सीधुपात्रेक्षुसीधुनोः ।
अच्छिन्नाध्वगपङ्क्तौ च सायकः शरखड्गयोः ॥१६७॥
स्थासकः पुंसि चार्च्चिक्ये † जलादेरपि बुद्बुदे ।
सूचकः सीवनद्रव्ये बोधके पिशुने शुनि ॥१६८॥
ओतौ काके सूतकोऽस्त्री पारदे न द्वयोर्ज्जनौ ।
सृदाकु नीऽनिले वज्रे ज्वलने प्रतिसूर्य्यके ॥१६९॥
सेवकस्तु प्रसेवे ना वाच्यलिङ्गोऽनुजीविनि ।
सेचकस्तु पुमान् मेघे वाच्यलिङ्गस्तु सेक्तरि ॥१७०॥
सैनिकः सैन्यरक्षे च स्यात् सेनासमवेतके ।
हारकः कितवे चौरे गद्यविज्ञानभेदयोः ॥१७१॥
हुडुक्को वाद्यभेदे च मत्तदात्यूहपक्षिणि ।
हेरुको बुद्धभेदे स्यान् महाकालगणेऽपि च ॥१७२॥

## कचतुष्कम् ।

भवेदलिमको भेके पिकेऽलौ पद्मकेशरे ।
मधूकेऽप्यथालिपको भृङ्गकोकिलकुक्कुरे ॥१७३॥
अङ्गारकः कुजेऽपि स्याद् दग्धकाष्ठे कुरण्टके ।
भवेदङ्गारिका चेक्षुदण्डे किंशुककोरके ॥१७४॥

---

* चतुष्कं चतुष्पथम् । † चार्च्चिक्यं चन्दनाद्यनुलेपनम् ।

२।

स्यादश्मन्तकमुद्धाने मल्लिका* च्छदनेऽपि च ।
आकल्पक स्तमोमोहग्रन्थिपूत्कलिकामुदोः ॥१७५॥
आक्षेपकोऽनिलव्याधौ व्याधे निन्दाकरेऽपि च ।
भवेदाखनिकश्चौरे शूकरे मूषिकेऽपि च ॥१७६॥
कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु ।
एड़मूकोऽन्यलिङ्गः स्यात् शठे वाक्श्रुतिवर्ज्जिते ॥१७७॥
कठिल्लकस्तु पर्णासे वर्षाभूकारवेल्लयोः ।
कपर्द्दको वराटे स्याज् जटाजूटे च धूर्ज्जटेः ॥१७८॥
कर्क्कटकः स्यान् मालूरकाद्रूवेयप्रभेदयोः ।
कलविङ्कः पुमान् ग्रामचटकेऽपि कलिङ्गके ॥१७९॥
कनीनिका तारकेऽक्ष्णः स्यात् कनिष्ठाङ्गुलावपि ।
कापटिकोऽन्यमर्म्मज्ञे छात्रे पुंसि शठे त्रिषु ॥१८०॥
काकरुको नग्नदम्भस्त्रीजितोलूकभीरुषु ।
निःस्वे कुरुवकः शोणाम्लानझिण्टीप्रभेदयोः ॥१८१॥
कुरुण्टकः पीतपुष्पाम्लानझिण्टिकयोः पुमान् ।
कृकवाकु र्मयूरेऽपि सरटे चरणायुधे ॥१८२॥
कोषातकः कचे पुंसि पटोल्यां घोषके स्त्रियाम् ।
अथ कौक्कुटिकोऽदूरप्रेरिता-†ऽक्षे च दाम्भिके ॥१८३॥
कौलेयकः सारमेये कुलीनेऽथ खरालिकः ।
ग्रामणीभण्डिनाराचेऽप्युपधाने च पुंस्ययम् ॥१८४॥

---

* मल्लिका दीपः ।        † अदूरप्रेरिताक्षः अदूरदर्शी ।

भवेद् गुणानिका नृत्ये शून्याङ्के पाठनिश्चितौ ।
गोकण्टको गोक्षुरके स्थपुटे गोखुरेऽपि च ॥१८५॥
गोमेदकं पीतमणौ काकोले पत्रकेऽपि च ।
स्याद् गोकुलिको वलिरे* पङ्कस्थगवोपेक्षके ॥१८६॥
अथ घर्घरिका क्षुद्रघण्टावादित्रदण्डयोः ।
चर्चरीको महाकाले केशविन्यासशाकयोः ॥१८७॥
चण्डालिका किन्नरायामुमायामोषधीभिदि ।
अथ चातुरको चक्रगण्डौ पुंस्यभिधेयवत् ॥१८८॥
गोचरे लोचनस्यापि चाटुकारे नियन्तरि ।
जर्ज्झरीकं बहुच्छिद्रे जरातुरेऽपि वाच्यवत् ॥१८९॥
जीवन्तिका गुडूच्याञ्च जीवाख्यशाकवन्दयोः ।
जैवातृकः पुमान् सोमे दीर्घायुःकृशयोस्त्रिषु ॥१९०॥
तर्त्तरीकं वहित्रे स्यान् न द्वयोः पारगे त्रिषु ।
तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे ॥१९१॥
त्रिवर्णकं गोक्षुरके त्रिफलायां कटुत्रिके ।
दलाढ़कः स्वयं जाततिले प्रश्नराश्च गैरिके ॥१९२॥
फेनखातकयो नागकेशरे च महत्तरे ।
दन्दशूकस्तु पुंलिङ्गो राक्षसे च सरीसृपे ॥१९३॥
दासेरकस्तु करभे† दासीपुत्रे च धीवरे ।
नियामकः कर्णधारे पोतवाहे नियन्तरि ॥१९४॥

---

* वलिरो नेत्ररोगस्पृष्टः, टेरा इति भाषा । † करभ उष्ट्रः ।

निस्वारकः पुरीषस्य क्षये स्वैरे समीरणे ।
निर्ग्रन्थकः स्यात् क्षपणे निष्फलेऽप्यपरिच्छदे ॥१९५॥
प्रचलाकः शराघाते शिखण्डे च भुजङ्गमे ।
प्रकीर्णकं चामरे स्याद् विस्तारे ना तुरङ्गमे ॥१९६॥
पञ्चालिका स्त्रियां वस्त्र-पुत्तिकागीतिभेदयोः ।
भवेत् पुमान् प्रापणिको गन्धविक्रयिणि द्विजे ॥१९७॥
स्यात् पिप्पलकं वक्षोजवृन्ते सीवनसूत्रके ।
पिण्डीतकः स्यात् तगरे मदनाख्यमहीरुहे ॥१९८॥
अथ पुष्पलको गन्धमृगे क्षपणकीलयोः ।
पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे ॥१९९॥
पुंसि व्याघ्रेऽग्निदिङ्नागे कोषकारान्तरेऽपि च ।
भवेत् पूर्णानकं* वर्द्धापने च पटहेऽपि च ॥२००॥
फर्फरीकश्चपेटे स्यात् फर्फरीकन्तु मार्दवे ।
बलाहको गिरौ मेघे दैत्यनागविशेषयोः ॥२०१॥
वराटकः पद्मवीजकोषे रज्जौ कपर्दके ।
वर्त्तका बलाकाभिद्वातवेल्लितशाखयोः ॥२०२॥
वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके ।
वर्त्तुलेऽथ वाणिजिको बाड़वाग्नौ वणिज्यपि ॥२०३॥
वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयो स्त्रिषु ।
अथ भ्रमरको भृङ्गे गैरिके चाऽलकान्तरे ॥२०४॥

---

* पूर्णालकमित्यपि वर्णयोजना दृश्यते ।

भट्टारको नृपे नाट्यवाचा देवे तपोधने ।
भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे ॥२०५॥
भार्य्याटिकः पुमान् भार्य्यानिर्ज्जिते हरिणान्तरे ।
भवेन्मरूवकः पुष्पभिच्छल्यद्रुफणिज्झके ॥२०६॥
मण्डोदकं चित्तरागे क्लीबमातर्पणे*ऽपि च ।
भवेन्मण्डलकं विम्बे कुष्ठभेदे च दर्पणे ॥२०७॥
अथ मर्कटकः ग्रासभेदे वानरलूतयोः ।
मयूरकोऽप्यपामार्गे क्लीवं तुत्थाञ्जने† पुनः ॥२०८॥
माणवको हारभेदे बाले कुपुरुषे वटौ ।
मृष्टेरुको वदान्येऽपि मिष्टाशिन्यतिथिद्विषि ॥२०९॥
रतर्द्धिकं स्याद् दिवसे सुखस्नानेऽष्टमङ्गले ।
राधरङ्कः पुमान् सीरे शीकरे च घनोपले ॥२१०॥
लालाटिकः प्रभोर्भावदर्शिन्यालेखणान्तरे ।
कार्य्याक्षमे लेखनिकः कथितो लेखहारके ॥२११॥
लेखेषु परहस्तेन स्वहस्तेन च लेखके ।
वार्त्तरूको नदीभेदे काकनीड़े जलावटे ॥२१२॥
विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ ।
वितुन्नकस्तु धन्याके झाटामलमयूरके ‡ ॥२१३॥
विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु ।
विदूषकस्स्याद्वटौ परनिन्दाकरेऽपि च ॥२१४॥

---

* आतर्पणं तण्डुलचूर्णलेखा, आलपाना इति भाषा ।

† तुत्थाञ्जनं नीलाञ्जनम् ।

‡ मयूरकं तुत्थाञ्जनं, तुंते इति भाषा ।

वैनाशिकः स्यात् क्षणिके परतन्त्रोर्णनाभयोः ॥
वैदेहको वाणिजके शूद्राद् वैश्यासुतेपि च ॥२१५॥
वैतालिकः पुमान् खेटिताले बोधकरे त्रिषु ।
शतानीकस्तु वृद्धे स्यान्मुनिराजप्रभेदयोः ॥२१६॥
शालावृकः शृगाले स्यात् सारमेये वलीमुखे ।
शिलाटकः पुमानट्टे विलेऽपि परिकीर्त्तितः ॥२१७॥
शृगालिका शिवायां स्यात् त्रासादपि पलायने ।
शृङ्गाटकं भवेद् वारिकण्टके च चतुष्पथे ॥२१८॥
सन्तानिकाऽपि क्षीरादिसारे मर्कटजालके ।
सन्दंशिका तु सुचुटीलौहयन्त्रविशेषयोः ॥२१९॥
सञ्चारिका तु युगले कुट्टनीघ्राणयोरपि ।
सङ्घाटिका स्त्रियां युग्मे कुट्टन्यां जलकण्टके ॥२२०॥
सुप्रतीकः शोभनाङ्गे भवेदीशानदिग्गजे ।
अथ सैकतिकं यातु यीतामङ्गलसूत्रके ॥२२१॥
ना सन्नस्ते क्षपणके त्रिषु सन्देहजीविनि ।
सोमवल्कस्तु धवलखदिरे कट्फलेऽपि च ॥२२२॥
सौगन्धिकन्तु कह्लारे पद्मरागेऽपि कत्तृणे ।
पुंलिङ्गो गन्धपाषाणे सुगन्धिव्यवहारिणि ॥२२३॥

## कपञ्चकम् ।

अनेड़मूक उद्दिष्टः शठे वाक्श्रुतिवर्ज्जिते ।
स्यादाच्छुरितकं हासनखराघातभेदयोः ॥२२४॥

उपकारिकोपकर्त्र्यां पिष्टभेदे नृपालये ।
कञ्चावेचक इत्येष शुद्धान्तोद्यानपालयोः ॥२२५॥
रङ्गाजीवे कवौ पिङ्गे द्वाःस्थेऽथ कटखादकः ।
खादके काचकलशे वलिपुष्टे च जम्बुके ॥२२६॥
क्रमिकण्टकन्तु चित्राङ्गविडङ्गोडुम्बरेषु च ।
गोजागरिकं मङ्गले पुंसि स्यात् कण्टकारके ॥२२७॥
चिलमीलिका तु कण्ठीभेदे खद्योतविद्युतोः ।
अथो जलकरङ्कः स्यान् नारिकेलफलेऽम्बुजे ॥२२८॥
शङ्खे जललतायाञ्च वारिवाहे च कीर्त्तितः ।
जलतापिक इत्तीशकाकोचिमत्स्ययोः पुमान् ॥२२९॥
नवफलिका स्त्रीनव्ये (नव) जातरजोऽङ्गनायाञ्च ।
नागवारिक उद्दिष्टो राजकुञ्जरे हस्तिपे ॥१३०॥
गणास्थराजे * गरुड़े चित्रमेखलकेऽपि च ॥
स्याद् व्रीहिराजिकः कङ्गुधान्यचीनकधान्ययोः ॥२३१॥
व्यवहारिका स्याल् लोकयात्रासम्मार्ज्जनीङ्गुदे ।
शतपर्व्विका दूर्व्वायां वचायामपि योषिति ॥२३२॥
शीतचम्पक इत्येष स्याद्दातर्पणदीपयोः ।
सुवसन्तक आख्यातो वासन्त्यां मदनोत्सवे ॥२३३॥
स्याद् हेमपुष्पिका यूथ्यां चम्पके हेमपुष्पकः ।

## कषट्कम् ।

ग्रामशङ्करिका ग्रामयुद्धे शृङ्गीझषे स्त्रियाम् ॥२३४॥

---

* गणास्थराजो गोष्ठीप्रधानः ।

आतुल-पुत्रक इत्यपि मातुल-तनये च फले धूर्त्तस्य * ।
मदनशलाका कामोद्दीपणभैषज्यशारिकयोः ॥२३४॥
वर्णविलोड़क † एष श्लोकस्तेनेच सन्धिचौरे च ।
सिन्दूरतिलक उक्तो मतङ्गजे स्त्री तु कामिन्याम् ॥२३५॥
इति कान्तवर्गः समाप्तः ।

---

## खैककम् ।

खमिन्द्रिये पुरे चेते शून्ये विन्दौ विहायसि ।
संवेदने देवलोके शर्म्मण्यपि ‡ नपुंसकम् ॥ १ ॥

## खद्विकम् ।

नखी स्त्रीक्लीवयोः शुक्तौ नखरे पुन्नपुंसकम् ।
न्युङ्खः सम्यङ्मनोज्ञे च साम्नः षट्प्रणवेऽपि च ॥२॥
प्रेङ्खा पर्य्यटनेऽप्यश्वगतौ संवेशनान्तरे ।
मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि ॥३॥
सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम् ।
लेखो लेख्ये सुरे लेखा लिपिराजिकयोरपि ॥४॥
विङ्खोऽश्वगतिभेदेऽपि शूकशिम्बराश्च नर्त्तने ।
शङ्खः कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे ॥५॥

---

* धूर्त्तस्य चस्य । † वर्णविलोपक इति क्वचित् पाठः ।
‡ कर्म्मण्यपीति पाठान्तरम् ।

शाखा पक्षान्तरे वाह्नौ वेदभागद्रुमाङ्गयोः ।
शिखा शाखावर्हिचूड़ालाङ्गलिक्य*ग्रमात्रके ॥६॥
चूड़ामात्रे शिखायाञ्च ज्वालायां प्रपदेऽपि च ।
सखा मित्रे सहाये ना वयस्यायां सखी मता ॥७॥
सुखं शर्म्मणि नाके च सुखा पुर्य्यां प्रचेतसः ।

## खत्रिकम् ।

गोमुखं कुटिलागारे वाद्यभाण्डे च लेपने ॥८॥
पुंसि मातलिपुत्रे च महादेवगणान्तरे ।
त्रिशिखो राक्षसे क्लीवं त्रिशूले मण्डलान्तरे ॥९॥
दुर्म्मुखः कपिभिन्नागभिदो र्ना मुखरे त्रिषु ।
प्रमुखः प्रथमे श्रेष्ठे मयूखः किरणेऽपि च ॥१०॥
ज्वालायामपि शोभायां विशिखस्तोमरे शरे ।
विशिखा तु खनित्राञ्च रथ्यानालिकयोरपि ॥११॥
विशाखस्तर्कके स्कन्दे स्त्रियामृच्चे कठिल्लके ।
वैशाखो मासभेदे स्यान् मन्थाने च प्रकीर्त्तितः ॥१२॥
सुमुखस्तार्क्ष्यतनये शाकनागप्रभेदयोः ।

## खचतुष्कम् ।

अवेदग्निमुखो देवे विप्रे भल्लातके स्त्रियाम् ॥१३॥
अथाग्निमुखमुद्दिष्टं कुसुम्भे कुङ्कुमेऽपि च ।
लाङ्गलिकाख्यौषधौ च विशल्यायाञ्च योषिति ॥१४॥

---

* लाङ्गलिकी लताविशेषः ।

इन्दुलेखाऽमृतासोमलता शशिकलासु च ।
अथ वह्निशिखा स्त्री स्यादुच्चटायां शिखौ त्रिषु ॥१५॥
महाशङ्खो मानुषास्थिसङ्ख्याभेदालिकेषु * च ।
भवेद् व्याघ्रनखं कन्दगन्धद्रव्यविशेषयोः ॥१६॥
नखक्षतान्तरे क्लीवं शिलीमुखोऽलिकाण्डयोः ।
शशिलेखा कलाभागे गुडूचीवृत्तभेदयोः ॥१७॥
भवेत् स्वस्तिमुखो लेखे ब्राह्मणे वन्दिनि त्रिषु ।

## खपञ्चकम् ।

मलिनमुखोऽग्नौ गोलाङ्गुले पुंसि त्रिषु क्रूरे ॥१८॥
शीतमयूख श्चन्द्रे घनसारे चापि पुंलिङ्गः ।
सर्व्वतोमुख उग्रे च चैतन्यब्रह्मणोः पुमान् ॥१९॥
नपुंसकन्तु पानीये सुरवर्त्म न्यपि स्मृतम् ।
खान्तवर्गः समाप्तः ।

---

## गैककम् ।

गौः स्वर्गे च बलीवर्द्दे रश्मौ च कुलिशे पुमान् ।
स्त्री सौरभेयीदृग्वाणदिग्वाग्भूष्वप्सु भूम्नि च ॥१॥
गायत्र्यामपि गम्भीरे जगत्यां भुवने जने ।
गोगणेशे च नाके च वियत्यपि पुमानयम् † ॥२॥

---

* अलिकं ललाटदेशः । † श्लोकोऽयं सर्व्वत्र न दृश्यते ।

गः सुमेरौ समाख्यातो गायत्रीगीतयोः पुमान् ।
गन्धर्व्वे चापि गः ख्यातो गायके चाभिधेयवत् * ॥३॥

## गद्विकम् ।

अगो मद्दीरुहे शैले भास्करे पवनाशने ।
अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति ॥४॥
क्लीवैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ।
इङ्गः स्यादद्भुते ज्ञाने जङ्गमेङ्गितयोरपि ॥५॥
खगः सूर्य्ये ग्रहे देवे मार्गणे च विहङ्गमे ।
खड्गो गण्डकशृङ्गासि-बुद्धभेदेषु गण्डके ॥६॥
गाङ्गस्तु गङ्गासम्भूते त्रिषु भीष्मे गुहे पुमान् ।
चङ्गस्तु शोभने दत्ते टङ्गोऽस्त्री स्यात् खनित्रके ॥७॥
खड्गभेदे च जङ्घायां त्यागो दाने च वर्ज्जने ।
तुङ्गी निशावर्व्वरयोः पुन्नागनगयोः पुमान् ॥८॥
उन्नते त्रिषु दुर्गोभानील्योः स्त्री दुर्गमे त्रिषु ।
नागं नपुंसके रङ्गे सीसके करणान्तरे ॥९॥
नागः पन्नगमातङ्गक्रूरचारिषु तोयदे ।
नागकेशर-पुन्नाग-नागदन्तकमुस्तके ॥१०॥
देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः ।
पिङ्गा गोरचनाहिङ्गुनालिकाचण्डिकासु च ॥११॥

---

* श्लोकोऽयमन्यत्र क्वापि सर्व्वत्र न दृश्यते ।

पिङ्गी शम्यां पिशङ्गे ना बालके तु नपुंसकम् ।
पूगस्तु क्रमुके वृन्दे फल्गुवसारेऽभिधेयवत् ॥१२॥
नदीभेदे मलप्वां स्त्री भङ्गो जयविपर्य्यये ।
भेदरोगतरङ्गेषु भङ्गा सस्यान्तरे स्त्रियाम् ॥१३॥
भगं स्त्रीयोनिवीर्य्येच्छाज्ञानवैराग्यकीर्त्तिषु ।
माहात्म्यैश्वर्य्ययत्नेषु धर्म्मे मोक्षे च ना रवौ ॥१४॥
भागो रूपार्द्धके भाग्यैकदेशयो र्भृगुः पुमान् ।
मुनौ हरे तटे शुक्रे भृङ्गो धूम्याटषिङ्गयोः ॥१५॥
मधुव्रते भृङ्गराजे पुंसि भृङ्गं गुड़त्वचि ।
भोगः सुखे धने चाहेः शरीरफणयोरपि ॥१६॥
पालनेऽभ्यवहारे च योषिदादिभृतावपि ।
मार्गो मृगमदे मार्गशीर्षे चान्वेषणाध्वनोः ॥१७॥
मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः ।
अन्वेषणे च याञ्चायां मृगी तु वनितान्तरे ॥१८॥
युगो रथहलाद्यङ्गे न द्वयोस्तु कृतादिषु ।
युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च ॥१९॥
योगोऽपूर्व्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु ।
वपुःस्थैर्य्ये प्रयोगेऽपि विष्कम्भादिषु भेषजे ॥२०॥
विस्रब्धघातके द्रव्योपायसन्नहनेष्वपि ।
कार्म्मणे*ऽपि च रङ्गो ना रागे नृत्ये रणक्षितौ ॥२१॥

---

* कार्म्मणं वशीकरणोपायः ।

अस्त्री लपुणि रागस्तु मात्सर्य्ये लोहितादिषु।
क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च ॥२२॥
रोगः कुष्ठौषधे व्याधौ लङ्गस्तु सङ्गषिङ्गयोः।
लिङ्गं चिह्नेऽनुमाने च साङ्ख्योक्तप्रकृतावपि ॥२३॥
शिवमूर्त्तिविशेषे च मेहनेऽपि नपुंसकम्।
व्यङ्गो भेके च हीनाङ्गे वङ्गं सीसकरङ्गयोः ॥२४॥
वार्त्ताकेऽपि च कार्पासे पुंभूम्नि नीवृदन्तरे*।
वल्गु स्याच्छागले पुंसि सुन्दरे चाभिधेयवत् ॥२५॥
वेगो जवे प्रवाहे च महाकालफलेऽपि च।
शार्ङ्गं कार्म्मुकमात्रेऽपि विष्णोरपि शरासने ॥२६॥
शुङ्गो वटाम्रातकयोः पर्कट्यामपि च स्त्रियाम्।
शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके ॥२७॥
विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात् कूर्च्चशीर्षके।
स्त्री विषायां† स्वर्णमीनभेदयोर्ऋषभौषधे ॥२८॥
सर्गस्तु निश्चयाध्यायमोहोत्साहालसृष्टिषु।

## गत्रिकम्।

अयोगो विधुरे कूटे विश्लेषे कठिनोद्यमे ॥२९॥
अनङ्गो मदनेऽनङ्गमाकाशमनसोरपि।
अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च ॥३०॥

---

* नीवृत् देशः। † विषा बुद्धिः।

आभोगो वारुणच्छत्रे पूर्णतायत्नयोरपि ।
आयोगो व्यापृतौ गन्धमाल्योपहाररोधसोः* ॥३१॥
आशुगो मारुते बाणेऽप्युद्वेगं क्रमुकीफले ।
उद्वेगोऽप्युद्भ्रान्तकोद्वेजनोद्गमनेषु च ॥३२॥
उत्सर्गः पुंसि सामान्ये न्याये च त्यागदानयोः ।
कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति ॥३३॥
नद्वयोः कौटजफले महिलायान्तु योषिति ।
कालिङ्गो भूम्नि कर्कारौ दण्डावलम्भजङ्गयोः ॥३४॥
कालिङ्गी राजकर्कट्यां चक्राङ्गो मानसौकसि ।
चक्राङ्गी कटुरोहिण्यां जिह्मगोऽहौ च मन्दगे ॥३५॥
तडागोऽस्त्री जलाधारविशेषे यन्त्रकूटके ।
तातगुः† क्षुद्रतातो ना जनकस्य हिते त्रिषु ॥३६॥
त्रिवर्गो धर्मकामार्थैस्त्रिफलायां कटुत्रिके ।
वृद्धिस्थानक्षये सत्वरजस्तमसि चेष्यते ॥३७॥
तुरगी चाश्वगन्धायां तुरगश्चित्तवाजिनोः ।
धारङ्गोऽसौ च तीर्थे च नरङ्गस्तु वरण्डके ॥३८॥
मेहने न द्वयोश्चाथ नारङ्गः पिप्पलीरसे ।
यमजे प्राणिनि विटे नागरङ्गद्रुमेऽपि च ॥३९॥
निषङ्गः सङ्गे तूणे च निसर्गौ रूपसर्गयोः ।
नीलाङ्गुः स्यात् क्रमौ भ्रमराल्याञ्च योषिति ॥४०॥

---

* बोधयोरिति पाठान्तरम् ।

† क्षुद्रतातः पितृव्यः ।

पलाङ्गं न द्वयो र्भूर्ज्जे पद्मके रक्तचन्दने ।
पन्नग स्त्वौषधिभेदे तथैव पवनाशने ॥४१॥
प्लवगो वानरे भेके सारथौ चोष्णदीधितेः ।
परागः सुमनोरेणौ धूलिस्नानीययोरपि ॥४२॥
गिरिप्रभेदे विख्यातावुपरागे च चन्दने ।
प्रयाग स्तीर्थभेदे स्याद् यज्ञे शतमखाख्ययोः ॥४३॥
प्रयोगः कार्म्मणेऽपि स्यात् प्रयुक्तौ च निदर्शने ।
पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्य्ययो ॥४४॥
क्लीवं सूते प्रियङ्गुः स्त्री राजीकाकण्योरपि ।
फलिन्यां कङ्गुसस्ये च पुन्नागस्तु सितोत्पले ॥४५
जातीफले नरश्रेष्ठे पाण्डुनागे द्रुमान्तरे ।
वराङ्गं योनिमातङ्गमस्तकेषु गुड़त्वचि ॥४६॥
भुजङ्गोऽहौ च षिङ्गे च मातङ्गः श्वपचे गजे ।
मृदङ्गः पटहे घोषे रक्ताङ्गस्तु महीसुते ॥४७॥
कम्पिल्ले स्त्री तु जीवन्त्यां क्लीवं विद्रुमधीरयोः* ।
रथाङ्गं न द्वयो श्चक्रे ना चक्राङ्गविहङ्गमे ॥४८॥
वातिगः पुंसि भण्टाक्यां धातुवादिनि† चान्यवत् ।
विड़ङ्ग स्त्रिष्वभिज्ञे स्यात् क्रमिघ्ने पुन्नपुंसकम् ॥४९॥
विसर्गस्तु पुमान् दाने त्यागे च मलनिर्गमे ।
विसर्ज्जनीयेऽप्ययनभेदेऽपि च विभावसोः ॥५०॥

---

* धीरं कुङ्कुमम् ।  † धातुवादी धातुज्ञो धातुव्यवसायी वा ।

विहगस्तु त्रिलिङ्गः स्यादाशुगे च विहङ्गमे ।
सर्व्वगं सलिले क्लीवं सर्व्वगः शङ्करे विभौ ॥५१॥
सम्भोगस्तु पुमान् भोगे सुरते जिनशासने ।
सारङ्गः पुंसि हरिणे चातके च मतङ्गजे ।
शबले त्रिषु हेमाङ्गो गरुड़े परमेष्ठिनि ॥५२॥

## गचतुष्कम् ।

स्यादपवर्गस्त्यागे मोक्षे कार्य्यावसाने साफल्ये ।
अभिषङ्गः पुंलिङ्गः पराभवाक्रोशशपथेषु ॥५३॥
ईहामृगस्तु पुंसि स्यात् कोक-*रूपकभेदयोः ।
उपरागस्तु पुंसि स्यात् राहुग्रासेऽर्कचन्द्रयोः ॥५४॥
दुर्नये ग्रहकल्लोले व्यसनेऽपि निगद्यते ।
उपसर्गः पुमान् रोगभेदोपप्लवयोरपि ॥५५॥
कटभङ्गस्तु सस्यानां हस्तच्छेदे नृपात्यये ।
कृतभङ्गोऽपि वैधव्ये स्वातन्त्र्यनृपनाशयोः ॥५६॥
दीर्घाध्वगः पुमानुष्ट्रे लेखहारे तु भेद्यवत् ।
मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि ॥५७॥
समायोगस्तु संयोगे समवाये प्रयोजने ।
सम्प्रयोगो रतेऽपि स्यादन्विते कार्म्मणेऽपि च ॥५८॥

## गपञ्चकम् ।

कथाप्रसङ्गो वातुले विषवैद्ये च वाच्यवत् ।

---

* कोकः व्याघ्रविशेषः ।

नाड़ीतरङ्गः काकोले* हिण्डके रतहिण्डके † ॥५८॥
गान्तवर्गः समाप्तः ।

---

## घैककम् ।

घो घण्टायां घर्घरे ना स्त्रियान्तु कान्तिघातयोः ।

## घद्विकम् ।

अघन्तु व्यसने दुःखे दुरिते च नपुंसकम् ॥ १ ॥
अर्घः पूजाविधौ मूल्ये पुंस्त्वः स्याद् देहजानिले ।
अग्नौ हस्तपुटे शङ्खोऽप्योघो वेगे जलस्य च ॥ २ ॥
वृन्दे परम्परायाञ्च द्रुतनृत्योपदेशयोः ।
मघा माघी च नक्षत्रे धान्यभेदे यथाक्रमम् ॥ ३ ॥
मघो द्वीपान्तरे मेघो मुस्ताजलदयोः पुमान् ।
मोघोऽस्त्री पाटलायां स्याद् हीननिष्फलयोस्त्रिषु ॥ ४ ॥
लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीवम् ।
शीघ्रे कृष्णागुरुण्यपि च पृक्कानामौषधौ तु स्त्री ॥ ५ ॥
श्लाघा स्त्रियां प्रशंसायां परिचर्य्याभिलाषयोः ।

## घत्रिकम् ।

अनघो निर्म्मलापापमनोज्ञेष्वभिधेयवत् ॥ ६ ॥
अमोघः सफले वाच्यवत् स्त्री पथ्या ‡ विडङ्गयोः ।
उल्लाघोऽपि शुचौ दक्षे दृष्टनीरोगयोस्त्रिषु ॥७॥

---

* काकोलं विषम् । † रतहिण्डकः लम्पटः । ‡ पथ्या हरितकी ।

काचिघः काञ्चनेऽपि स्यात् क्षेमखण्डे नूपिकेऽपि च ।
निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि ॥८॥
पलिघः काचकलसे घटप्राकारगोपुरे ।
परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः ॥९॥
प्रतिघः प्रतिघाते स्यात् क्रोधेऽपि परिकीर्त्तितः ।
महार्घस्तु महामूल्ये लिषु स्याल् लावके* पुमान् ॥१०॥
सर्व्वौघो गुरुवेगे च सर्व्वसन्नहने पुमान् ।

घान्तवर्गः समाप्तः ।

---

## ङैककम् ।

ङः पुमान् विषये ख्यातः स्पृहायां विषयस्य च ॥ १ ॥

ङान्तवर्गः समाप्तः ।

---

## चैककम् ।

चश्चखण्डेऽपि पुमान्सुक्तः कच्छपे चन्द्रचौरयोः ।

## चद्विकम् ।

अर्च्चा पूजाप्रतिमयोः कचः केशे गुरोः सुते ॥ १ ॥
बन्धे शुष्कव्रणे पुंसि करिण्यान्तु कचा स्त्रियाम् ।
काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे ॥२॥

---

* लावकः पक्षिविशेषः ।

काञ्ची स्यात् मेखलादाम्नि प्रभेदे नगरस्य च ।
कूर्च्चमस्त्री भुवोर्मध्ये कठिनश्मश्रुकैतवे ॥३॥
क्रौञ्चो द्वीपविशेषे स्यात् पचिपर्व्वतभेदयोः ।
चर्च्चा चिन्ताख्यासकयोश्चर्च्चिकायाञ्च योषिति ॥४॥
चञ्चा तु नलनिर्म्माणे तृणनिर्म्मितपूरुषे ।
चञ्चुस्त्रोट्यां स्त्रियां पुंसि गोनाड़ीके व्यड्वके ॥५॥
त्वक् स्त्री चर्म्मणि वल्के च गुड़त्वचि विशेषतः ।
न्यङ् नीचमन्दयो र्नीचः पामरे वामनेऽपि च ॥६॥
प्राच्छब्दो दिशि देशे च काले च वाच्यलिङ्गकः ।
पिचु र्ना कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे ॥७॥
मोचः शोभाञ्जने पुंसि मोचा शाल्मलिरम्भयोः ।
रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः ॥८॥
रुक् स्त्री शोभाद्युतीच्छासु वचः कीरे वचौषधौ ।
सारिकायाञ्च वाग्वाचे भारत्यां वचने स्त्रियौ ॥९॥
वीचिः स्वल्पे तरङ्गे स्यादवकाशे सुखे द्वयोः ।
शुचि ग्रीष्माग्निश्‍ङ्गारेष्वाषाढ़े शुद्धमन्त्रिणि ॥१०॥
ज्यैष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु ।
शचीन्द्राण्यां शतावर्य्यां योषितः करणान्तरे ॥११॥
सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे ।

## चत्रिकम् ।

काष्ठदग् दिग्देशकालेषु वाच्यवत् त्रितयेऽव्ययम् ॥१२॥

कणीचिः पुष्पितलतागुञ्जयोः शकटे स्त्रियाम् ।
कवचो गर्द्दभाण्डे* च सन्नाहे पटहेऽपि च ॥१३॥
क्रकचः करपत्रेऽस्त्री ग्रन्थिलाख्यतरौ पुमान् ।
नमुचिस्तु पुमान् दैत्यभेदे कुसुमकार्मुके ॥१४॥
नाराचेषणिकायां ना लौहवाणास्त्रहस्तिनोः ।
प्रपञ्चः सञ्चयेऽपि स्याद् विस्तारे च प्रतारणे ॥१५॥
प्रत्यग् दिग्देशकालेषु वाच्यवत् त्रितयेऽव्ययम् ।
मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम् ॥१६॥
मारीचो राक्षसभेदे कक्कोले याजकद्विजे ।
मरीची देवताभेदे विपञ्ची केलिवीणयोः ॥१७॥
विकचः क्षपणे केतौ नाऽकेशे स्फुटितेऽन्यवत् ।
विरिञ्चि र्ना विरिञ्चश्च वैकुण्ठे परमेष्ठिनि ॥१८॥
सङ्कोचो मीनभेदे च बन्धे क्लीवन्तु कुङ्कुमे ।
सम्यक् स्याद् वाच्यलिङ्गस्तु मनोज्ञे सङ्गतेऽपि च ॥१९॥

## चचतुष्कम् ।

जलसूचिः कङ्कलोटिमत्स्यशृङ्गाटयोरपि ।
शिशुमारे च पुंलिङ्गो जलौकायाञ्च योषिति ॥२०॥
मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान् ।

## चपञ्चकम् ।

रतनारीचो नारीणां शीत्कारे च शुनि स्मरे ॥२१॥

चान्तवर्गः समाप्तः ।

---

* गर्द्दभाण्डः वृक्षविशेषः ।

## छैककम् ।

छा छादने स्त्रियां ख्याता निर्म्मलेऽन्यवदिष्यते ।
तरले छं प्रकीर्त्तितं साह्वालेऽ परस्मेऽपि च ॥१॥

## छद्विकम् ।

स्वच्छः स्फटिकमल्लूकनिर्म्मलेष्वच्छमव्ययम् ।
आभिमुख्येऽथ कच्छः स्यादनूपे तुन्नकद्रुमे ॥२॥
नौकाङ्गे पुंसि वाराह्यां चीरिकायाञ्च योषिति ।
स्याद् गुच्छः स्तवके स्तम्बे हारभेदकलापयोः ॥३॥
पिच्छा पूगच्छटाकोषमोचाशाल्मलिवेष्टके ।
भक्तसम्भूतमण्डे च पङ्क्तावश्वपदामये ॥४॥
स्त्रियां पुंसि तु लाङ्गूले न द्वयो र्बर्हचूड़योः ।
पुच्छः पश्चात् प्रदेशेऽपि लाङ्गूले पुच्छ मस्त्रियाम् ॥५॥
म्लेच्छः पामरभेदे च पापरक्तेऽपभाषणे ।

## छचतुष्कम् ।

मण्डाकच्छस्तु पुंसि स्यात् समुद्रे च प्रचेतसि ॥६॥

छान्तवर्गः समाप्तः ।

---

## जैककम् ।

जो ना मृत्युञ्जये जन्यां जातमात्रे जनार्द्दने ।
का० त्वरिते जः समाख्यातो जयने जिः प्रकीर्त्तितः ॥१॥

जूस्त्वरागमने प्रोक्तः सामान्यगमने स्त्रियाम् ।
जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम् ॥२॥

## जद्विकम् ।

अजश्छागे हरिब्रह्म-धातुस्मरहरे नृपे ।
अजोऽस्त्री शङ्खे(ना)निचुले धन्वन्तरौ हिमकिरणे ॥३॥
क्लीवं पद्मे अथाजिः स्त्री समभूमौ च संग्रामे ।
ऊर्जस्तु कार्त्तिकोत्साहबलेषु प्राणनेऽपि च ॥४॥
कञ्जः केशे विरिञ्चौ च कञ्जं पीयूषपद्मयोः ।
कुजा कात्यायनीदेव्यां कुजो नरकभौमयोः ॥५॥
कुब्जो वृक्षप्रभेदे ना न्युब्जे स्याद् वाच्यलिङ्गकः ।
कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनाम् ॥६॥
खञ्जा छन्दः प्रभेदे स्त्री कुटिलाङ्घ्रौ तु वाच्यवत् ।
खजा मन्थे प्रहस्तेऽथ खर्जूः कीटान्तरे स्मृता ॥७॥
खर्ज्जूरीपादपे कण्डूां गजो माने मतङ्गजे ।
वास्तुनः स्थानभेदेऽपि गञ्जा खनौ सुरागृहे ॥८॥
गञ्जः स्यात् पुंसि रीढ़ायां भाण्डागारे तु न स्त्रियाम् ।
गुञ्जा तु काकचिञ्चायां पटहे च कलध्वनौ ॥९॥
द्विजः स्याद् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु ना ।
द्विजा भार्ग्यां हरेणौ च ध्वजः स्यात् शौण्डिके पुमान् ॥१०॥
न स्त्रियान्तु पताकायां खट्वाङ्गे मेढ्रचिह्नयोः ।
निजं स्वीये च नित्ये च न्युब्जो दर्भमयस्रुचि ॥११॥

कर्म्मरङ्गफले क्लीवं कुब्जाधोमुखयो स्त्रिषु ।
प्रजा लोके च सन्ताने पिञ्जा तूलहरिद्रयोः ॥१२॥
वले क्लीवे बधे पुंसि व्याकुले त्रिष्वथो भुजा ।
द्वयोर्बाहौ करे मर्ज्जूः स्त्री शुद्धौ धावकेऽपि च ॥१३॥
रजो रेणौ परागे स्यादार्त्तवे च गुणान्तरे ।
रज्जु र्वेण्यां गुणे योषित् राजिः स्त्री पङ्क्तिरेखयोः ॥१४॥
रुजा रोगे च भङ्गेऽथ लाजः स्यादार्द्रतण्डुले ।
नपुंसकमुषिरे च स्त्रियां पुंभूम्नि चाक्षते ॥१५॥
व्रजो गोष्ठाध्ववृन्देषु वाजो निस्वनपक्षयोः ।
वेगे पुमानथ क्लीवे घृतयज्ञान्नवारिषु ॥१६॥
व्याजः शाठ्येऽपदेशेऽथ वीजमङ्कुरकारणे ।
हेतुतत्त्वाधानशुक्रे सर्ज्जू र्वणिजि विद्युति ॥१७॥
स्त्रियां सञ्ज्ञो विधौ रुद्रे स्रजः प्रस्वेदपुत्रयोः ।
क्लीवं रक्तेऽथ सज्जः स्यात् सन्नद्धे सम्भृते त्रिषु ॥१८॥

## जत्रिकम् ।

अण्डजो मृगनाभौ स्यात् सरटेऽहौ खगे झषे ।
अङ्गजं रुधिरेऽनङ्गकेशपुत्रमदेषु ना ॥१९॥
अम्बुजो निचुले पुंसि कमले तु नपुंसकम् ।
कम्बोजो हस्तिभेदेऽपि शङ्खदेशविशेषयोः* ॥२०॥

---

* जलरुक् स्याद् योगभेदे ना रक्तेऽपि स्यान् नपुंसकमिति श्लोकार्द्धं कोषपुस्तके दृश्यते ।

करजं स्याद् व्याघ्रनखे * करञ्जनखयोः पुमान्।
कारुजः शिल्पिनां चित्रे वाल्मीके गजार्भके ॥२१॥
काम्बोजोऽश्वान्तरे सोमवल्के पुन्नागपादपे।
काम्बोजी माषपर्ण्यां च बलक्षखदिरे स्त्रियाम् ॥२२॥
कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि।
गिरिजं लक्ष्मकेऽपि स्यात् शिलाजतुनि शैलजे ॥२३॥
लोहेऽपि गिरिजा गौरीमातुलुङ्गोश्च योषिति।
जलजं कमले शङ्खे नीरजं कुष्टपद्मयोः ॥२४॥
पङ्कजं तैलयन्त्रे स्यात् क्षुरिकाफलफेनयोः।
बलजं गोपुरे क्षेत्रे सस्यसङ्गरयोरपि ॥२५॥
बलजा वरयोषायां यूथ्यामपि वणिक् स्त्रियाम्।
वणिज्यायां पुमान् वाणिजिके च करणान्तरे ॥२६॥
बाहुजः क्षत्रिये कीरे स्वयञ्जाततिलेऽपि च।
भूमिजो नरकेऽङ्गारे सीतादेव्यान्तु भूमिजा ॥२७॥
वनजा मुद्गपर्ण्यां ना मुस्तके क्लीवमम्बुजे।
सहजस्तु निसर्गे ना सहोत्थे पुनरन्यवत् ॥२८॥
समजः पशुवृन्दे ना विपिने तु नपुंसकम्।
सामजस्तु गजे पुंसि सामोत्थे पुनरन्यवत् ॥२९॥
हिमजा तु शची-गौर्य्योः पुंसि मैनाकपर्व्वते।

---

* व्याघ्रनखं गन्धद्रव्यविशेषः।

## जचतुष्कम् ।

अग्निभुक् वह्निषे तार्च्ये पुंसि काश्मीरजं पुनः ।
कुष्ठकुङ्कुमयोः क्लीवेऽतिविषायान्तु योषिति ॥३०॥
क्षीराब्धिजन्तु सामुद्रलवणे मौक्तिकेऽपि च ।
पुमान् तुषारकिरणे कमलायान्तु योषिति ॥३१॥
ग्रहराजो रवौ चन्द्रे जघन्यजः कनीयसि ।
वृषले द्विजराजस्तु चन्द्रेऽनन्ते गरुत्मति ॥३२॥
धर्म्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान् ।
भारद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहङ्गमे ॥३३॥
भारद्वाजी वनकार्पास्यां ना द्रोणऋषिभेदयोः ।
अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे ॥३४॥
यक्षराट् पुंसि धनदे मल्लानां रङ्गचत्वरे ।
राजराजः कुवेरेऽपि सार्व्वभौमे सुधाकरे ॥३५॥

## जपञ्चकम् ।

वृषभध्वज एषोऽपि शङ्करे चार्हदन्तरे ।
मुनिमेषजभागल्ये हरीतक्याञ्च लङ्घने ॥३६॥

## जषट्कम् ।

वसुन्धरीशज-* श्चन्द्रे पद्मेऽपि परिकीर्त्तितः ।

जान्तवर्गः समाप्तः ।

---



* शब्दोऽयमन्यत्र क्वचित् न दृश्यते ।

## झैककम्।

झो झण्टीशे सुरगुरौ दैत्यराजे ध्वनावपि।

## झद्विकम्।

झञ्झा वाते तारवायौ नष्टेऽपि परिकीर्त्तितः ॥१॥
झञ्झाध्वनिविशेषेऽपि स्याद्रुकणवर्षणे।

झान्तवर्गः समाप्तः।

---

## ञैककम्।

ञः पुमान् स्याद् बलीवर्द्दे शुक्रे वाममतावपि*।
ज्ञो ब्रह्म-बुध-विद्वत्सु—

## ञद्विकम्।

स्यादज्ञो जड़मूर्खयोः ॥१॥
प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति।
राज्ञी राजप्रियायाञ्च भार्य्यायां भास्करस्य च ॥२॥
संज्ञा नामनि गायत्र्यां चेतनारवियोषितोः।
अर्थस्य सूचनायाञ्च हस्ताद्यैरपि योषिति ॥३॥

## ञत्रिकम्।

कृतज्ञः कुक्कुरे पुंसि मर्य्यादिन्यभिधेयवत्।
चेतज्ञ आत्मनि छेके† दैवज्ञो गणके पुमान् ॥४॥

---

* वाममतिः स्वधर्म्मभ्रष्टः। † छेको लम्पटः।

द्वैवर्णे चणिकायां स्त्री सर्वज्ञः शिवबुद्धयोः ।

ञान्तवर्गः समाप्तः ।

## टैककम् ।

टः पुमान् वामने पादे निस्वनेऽपि क्वचिन्मतः ।
टा पृथिव्यां करङ्के टो ध्वनौ च परिकीर्त्तितः ॥१॥
टो महेश्वर आख्यातः ख्याते त्रिभुवनेऽपि च ।

## टद्विकम् ।

अट्टं भक्ते च शुष्के ना क्षौमेऽलर्थे ऽट्टहासान्तरे ॥२॥
दृष्टनाशंसितेऽपि स्यात् पूजिते प्रेयसि त्रिषु ।
सप्ततन्तौ पुमान् क्लीबं संस्कारे कलुकर्म्मणि ॥३॥
दृष्टिमताभिलाषे च सङ्कल्पलोकयागयोः ।
कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शरे *॥४॥
समये गजगण्डे च पिप्पल्यान्तु कटी मता ।
कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि ॥५॥
नपुंसकमकार्य्ये स्यात् पुंलिङ्गो रसमात्रके ।
त्रिषु तद्वत् सुगन्ध्योश्च मत्सरेऽपि खरेऽपि च ॥६॥
कष्टन्तु गहने कृच्छ्रे क्रुष्टं रोदनरावयोः ।
कुटः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे ॥७॥
कुटी स्यात् कुम्भदास्याञ्च सुरायां चित्रगुच्छके ।
कूटोऽस्त्री निश्चले राशौ लौहमुद्गरदम्भयोः ॥८॥

* शवे इति पाठान्तरम् ।

मायाद्रिश्रृङ्गयोस्तुच्छे सीरावयव-यन्त्रयोः।
अनृते चाथ कृष्टिः स्यादाकर्षे स्त्री बुधे पुमान् ॥९॥
कोटिः स्त्री धनुषोऽग्रेऽस्त्री सङ्ख्याभेद-प्रकर्षयोः।
खटोऽन्धकूप-कफयोः प्रहारान्तर-टङ्कयोः ॥१०॥
खाटिस्त्वसङ्कृत्येऽपि स्यात् किणे शवरथे स्त्रियाम्।
खेटः कफे ग्रामभेदे चर्म्मण्यस्त्रवति त्रिषु ॥११॥
अथ गृष्टिः सकृत्सूतगवीबदरयोः स्त्रियाम्।
घटः समाधिभेदेभशिरःकूटकुटेषु च ॥१२॥
घटा घटन-गोष्ठीभघटनासु च योषिति।
घृष्टिः स्त्री घर्षण-स्पर्द्धा-विष्णुक्रान्तासु * ना किरौ † ॥१३॥
घोण्टा तु बदरीपूगवृक्षयोरपि योषिति।
चटुश्चाटौ पिचिण्डे-‡ ऽथ व्रतिनामासने पुमान् ॥१४॥
जटालग्नकचे मूले मांस्यां शच्यां पुनर्जटी।
जुष्टन्तु क्लीवमुच्छिष्टे सेविते वाच्यलिङ्गकम् ॥१५॥
झाटो निकुञ्जे कान्तारे व्रणादीनाञ्च मार्ज्जने।
तटं नपुंसकं क्षेत्रे प्रतीरे तु तटं त्रिषु ॥१६॥
त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि।
त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः ॥१७॥
त्रोटिः स्त्री कट्फले चञ्च्वां खगे मीनान्तरेऽपि च।
दिष्टं दैवे पुमान् काले दिष्टिर्मुत्परिमाणयोः ॥१८॥

---

* विष्णुक्रान्ता अपराजिता लता। † किरिः वराहः।

‡ पिचिण्ड उदरम्।

स्त्रियां दृष्टिः स्त्रियां बुद्धौ लोचने दर्शनेऽपि च ।
घटो दिव्यतुलायां स्याद् घटी चीरे च वाससः ॥१९॥
नटी नल्योषधौ स्त्री स्यात् शैलूषाशोकयोः पुमान् ।
पटश्चित्रपटे वस्त्रेऽस्त्री पियालद्रुमे पुमान् ॥२०॥
पटुर्दक्षे च नीरोगे चतुरेऽप्यभिधेयवत् ।
पटोले तु पुमान् क्लीवे छत्रालवणयोरपि ॥२१॥
पट्टः पेषणपाषाणे व्रणादीनाञ्च बन्धने ।
चतुष्पथे तु राजादिशासनान्तर-पीठयोः ॥२२॥
पटिः स्त्री पटभेदे स्याद् वाग्गुलौ कुम्भिकाद्रुमे ।
पुष्टिः स्त्री पोषणे वृद्धौ फटा तु फणदन्तयोः ॥२३॥
वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः ।
भटः स्यात् पुंसि वीरे च विशेष पामरस्य च ॥२४॥
भृष्टिः स्याद् भर्ज्जने शून्यवाटिकायाञ्च योषिति ।
म्लिष्टं त्रिष्वव्यक्तवाचि म्लाने मुष्टि र्द्वयोः पले ॥२५॥
बद्धपाणौ त्सरौ यष्टिः पुंसि स्याद् भुजदण्डके ।
द्वयोर्हारलताभार्ग्यौ मधुका-शस्त्रभेदयोः ॥२६॥
रिष्टं क्षेमे शुभाभावे पुंसि खड्गे च फेनिले ।
रिष्टिः खड्गे नाऽशुभे स्त्री लाटो देशान्तरेऽशुके ॥२७॥
वाटो मार्गे वृतिस्थाने स्यात् कुटी-वास्तुनोः स्त्रियाम् ।
विटोऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च ॥२८॥
विष्टिस्त्रिषु कर्मकरे स्याज्जूवेतनकर्मसु ।
व्युष्टिः फले समृद्धौ स्त्री व्युष्टं कल्ये त्रिषूषिते ॥२९॥

सटा जटा-केशरयोः स्फुटो व्यक्तप्रफुल्लयोः ।
व्याप्ते त्रिषु स्फुटि र्योषित् पादस्फोटाशयेऽपि च ॥२०॥
निर्भिन्नकर्क्कटीसस्येऽपि स्यात् सृष्टस्तु निर्म्मिते ।
युक्तनिश्चितयोः प्राज्ये त्रिषु सृष्टिस्तु निर्म्मितौ ॥२१॥
स्वभावे चापि कथिता हृष्टो रोमाञ्चितेऽपि च ।
जातहर्षे प्रहसिते विस्मितेऽप्यभिधेयवत् ॥२२॥

## टचिकम्।

अवटः स्यात् खिले गर्त्ते कूपे कुहकजीविनि ।
अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः ॥२३॥
अरिष्टमशुभे तक्रे सूतिकागार आसवे ।
शुभे मरणचिह्ने चादिष्टमादेशिते त्रिषु ॥२४॥
आच्छन्नोच्छिष्टयोः क्लीवमुत्कटस्तीव्रमत्तयोः ।
उड्ढटः कच्छपे सूर्य्ये कर्कटो विहगान्तरे ॥२५॥
राशिभेदे कुलीरे स्त्री वालुङ्क्यां शाल्मलीफले ।
कर्द्दटः करहाटे स्यात् पङ्कपङ्कारयोरपि ॥२६॥
करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीविनि ।
एकादशाहादिश्राद्धे दुर्द्दुरूटेऽपि* वायसे ॥२७॥
करटो वाद्यभेदेऽथ कार्प्पटो जतुकार्य्यिणोः † ।
कीकटः कृपणे निःस्वे त्रिषु पुंभूम्नि नीवृति ॥२८॥

---

* दुर्द्दुरूटो नास्तिकः । † कार्य्यी कार्य्यार्थी (উমেদওয়ার) इति भाषा ।

कुरण्टी दारुपुत्र्यां ना झिण्टाम्लानप्रभेदयोः ।
कुक्कुटो व्रतचर्य्यायां पुंसि स्यात् चरणायुधे ॥३९॥
निषादशूद्रयोः पुत्रे तृणोल्कायाञ्च कुक्कुभे ।
कुनटी मनःशिलायां नैपाल्यामपि योषिति ॥४०॥
कपीटमुदरे तोये केशटो छर्व्वजौकणे ।
चर्पटः स्फारविपुले चपेटे पर्प्पटेऽपि च ॥४१॥
चक्राटो विषवैद्ये च धूर्त्तद्रोनारयोरपि ।
चिपिटः खाद्यभेदे ना त्रिषु पिट्टिकविस्तृते* ॥४२॥
चिरण्टी च सुवासिन्यां † स्याद् द्वितीयवयःस्त्रियाम् ।
जकुटं वार्त्ताकुपुष्पे जकुटो मलये शुनि ॥४३॥
तरङ्कटं शिक्यभेदेऽपि धौताञ्जन्याञ्च न द्वयोः ।
त्रिकूटं सिन्धुलवणे त्रिकूटः पर्व्वतान्तरे ॥४४॥
त्रिपुटा मल्लिकायाञ्च सूक्ष्मैलात्रिवृतोः स्त्रियाम् ।
सतीलके च तीरे च त्रिपुटः समुदाहृतः ॥४५॥
द्रोहाटः कथितो गाथाप्रभेदे मृगलुब्धके ।
वैड़ालव्रतिके चाथ धाराटश्चातकाश्वयोः ॥४६॥
निर्दटस्तु दयाशून्ये कथितो निष्प्रयोजने ।
परापवादरक्ते च वाच्यलिङ्गोऽयमिष्यते ॥४७॥
निष्कुटस्तु गृहोद्याने स्यात् केदारकपाटयोः ।
पर्क्कटी नूतनफले पूगादेः प्लक्षपादपे ॥४८॥

---

* पिट्टिकविस्तृतो विस्तृतनासिकः ।

† सुवासिनी पितृगृहवासिनी ।

परीष्टिः परिचर्य्यायां प्राकाम्येऽन्वेषणे स्त्रियाम् ।
पर्प्पटी पिष्टभेदे स्यात् पर्प्पटो भेषजान्तरे ॥४९॥
पालटः कर्पटे पुंसि क्लृप्ते स्यादभिधेयवत् ।
पिच्चटो नेत्ररोगे स्यात् क्लीवं सीसकरङ्गयोः ॥५०॥
बरटो द्वयो बरट्यां स्त्री हंस्यां तत्पतौ पुमान् ।
बर्व्वटी पण्ययोषायां व्रीहिभेदेऽपि योषिति ॥५१॥
बेकटः स्याद् बैकटिके मत्स्यभेदे च यूनि च ।
भावाटो भावके साधौ निवेशे कामुके नटे ॥५२॥
भाकूटः शैलभ्रमयो भेदे स्यादश मर्कटी ।
करञ्जभिच्छूकशिम्ब्योः पुंसि [illegible]नरलूतयोः ॥५३॥
मोचाटः कृष्णजीरे च रम्भ[illegible] ।
मोरटन्तु भवेदिक्षुमूलाङ्कोठ[illegible]
सप्तरात्रात् परक्षीरे* मूर्च्छि[illegible]टा ।
वर्णाटो गायने चित्रकरे [illegible] ॥५५॥
विकटा वज्रवाराह्यां [illegible] विकरालयोः ।
शाकटं शकटस्येदमित्य[illegible]पोढ़रि ॥५६॥
शैलाटो देवले सिंहे शुक्लव[illegible]-किरातयोः ।
संसृष्टं त्रिषु संसर्गे संशुद्धे [illegible]समादिना ॥५७॥

## टचतुष्कम् ।

उत्किङ्गटस्तृणगड़मत्स्यकोपनयोः पुमान् ।

---

* सप्तरात्रस्थितदुग्धम् । † स्त्रीकृतजीवनो नटः ।

करहाटः शिफाकन्दे पद्मस्य मदनद्रुमे ॥५८॥
स्यात् कार्य्यपुटः चपणोन्मत्तानर्थकरेषु च* ।
कामकूटस्तु वेश्यायाः प्रियविभ्रमयोः पुमान् ॥५९॥
कुटन्नटन्तु कैवर्त्तीमुस्तके पुंसि शोणके ।
कुण्डकीटस्तु चार्व्वाकवचनाभिज्ञपूरुषे ॥६०॥
पतितब्राह्मणी पुत्र-दासीकामुकयोरपि ।
खञ्जरीटस्तु † फलकासिधारव्रतधारिणोः ॥६१॥
गाढ़मुष्टिः कृपाणे ना कृपणे त्वभिधेयवत् ।
चक्रवाटः क्रियारोहे पर्य्यन्ते च शिखातरौ ‡ ॥६२॥
चतुःषष्टिः कलासङ्ख्याभे[illegible] बह्वृचि स्त्रियाम् ।
नारकीटोऽ[illegible]दत्ताशाविहन्तरि ॥६३॥
परपुष्टः पर[illegible]तु योषिति ।
प्रतिकृष्टं मतं [illegible]था च कर्षिते ॥६४॥
प्रतिहृष्टः प्रेषि[illegible]शाख्याते च वाच्यवत् ।
वर्कराटः कटाक्षे स्यात् [illegible]दित्यरोचिषि ॥६५॥
नारीपयोधरोत्सङ्ग-स्थ [illegible]च्यते ।
शिपिविष्टस्तु खलतौ शि[illegible]दुश्चर्म्मणि स्मृतः ॥६६॥
अथ स्फुतिकटः प्रान्तक्लोहे [illegible]द्वौ पापशोधने ।

---

* क्षपणोन्मत्तानर्थकरेषु च इति क्वचित् पाठः ।
† खड्गारीट इति खड्गराट इति केचित् पठन्ति ।
‡ शिखातरुः दीपदण्डः ।

## टपञ्चकम् ।

दृष्टानोच्छिष्टः पुंसि स्यात् निश्वासाधरचुम्बयोः ॥६७॥

टान्तवर्गः समाप्तः ।

---

## ठैककम् ।

ठो मण्डले चन्द्रबिम्बे शून्ये च लोकगोचरे ।

## ठद्विकम् ।

कठो मुनौ तदाख्यातवेदाध्येतृच्चयोः स्वरे ॥१॥
कण्ठो गले सन्निधाने ध्वनौ मदनपादपे ।
काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः ॥२॥
स्थानमात्रे दिशि च स्त्री दारुणि स्यात् नपुंसकम् ।
कुष्ठं रोगे पुंष्करेऽस्त्री कुण्ठोऽकर्म्मण्यमूर्खयोः ॥३॥
कोष्ठः कुसूले चात्मीये मध्ये कुक्षे गृहस्य च ।
गोष्ठं गोस्थानके गोष्ठी सभासंलापयोः स्त्रियाम् ॥४॥
ज्येष्ठः श्रेष्ठेऽतिवृद्धे च त्रिषु मासान्तरे पुमान् ।
ज्येष्ठा तु गृहगोधाख्यजन्तुनक्षत्रभेदयोः ॥५॥
निष्ठा निष्पत्तिनाशान्तयाञ्चानिर्व्वहणेषु च ।
प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि चाण्डालिकौषधौ ॥६॥
पाठस्य पठने ख्यातो विद्धकर्णीन्तु योषिति ।
पृष्ठं चरमगात्रेऽपि * देहस्यावयवान्तरे ॥७॥

---

* चरमगात्रं पश्चाद्भागः उपरिभागो वा ।

वण्ठः स्यादकृतोद्वाहे खर्व्वे कुन्तायुधेऽपि च ।
शठो मध्यस्थपुरुषे धूर्त्त-धूस्तूरयोरपि ॥८॥
श्रेष्ठो वरे कुवेरे च शोठो मूर्खेऽलसेऽपि च ।
षष्ठी कात्यायनीतिथ्यो स्त्रिषु षस्याञ्च पूरणे ॥९॥
हठः स्यात् प्रसभे प्रघ्नां हेठो बाधाविहेठयोः ।

## ठत्रिकम् ।

अपष्ठुः पुंसि काले च वामे स्यादन्यलिङ्गकः ॥१०॥
अम्बष्ठो देशभेदेऽपि विप्राद् वैश्यासुतेऽपि च ।
अम्बष्ठा चाम्ललोण्यां स्यात् पाठायूतिकयोरपि ॥११॥
कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम् ।
कनिष्ठोऽतियुवात्यल्पानुजे स्त्री दुर्बलाङ्गुलौ ॥१२॥
जरठः कर्कशे पाण्डौ कठिनेऽप्यभिधेयवत् ।
नर्म्मठस्त्वचुके षिङ्गे प्रतिष्ठा गौरवे स्थितौ ॥१३॥
स्थाने च यागनिष्पत्ति-चतुरक्षरपद्ययोः ।
प्रकोष्ठो मणिबन्धस्य कुर्परस्यान्तरेऽपि च ॥१४॥
भूपकक्ष्यान्तरेऽपि स्याद् वरिष्ठं मरिचेऽपि च ।
ताम्रे क्लीवं तित्तिरौ ना वरोरुतरयोरपि* ॥१५॥
मकुष्ठो व्रीहिभेदे ना मन्थरे पुनरन्यवत् ।
लघिष्ठोऽत्यल्पके भेले वैकुण्ठः कृष्णशक्रयोः ॥१६॥

---

* वरोरुतमयोस्त्रिषु इति क्वचित् पाठः ।

श्रीकण्ठो देशभिद्रुद्रे साधिष्ठोऽतिदृढार्थयोः ।

## ठचतुष्कम् ।

कलकण्ठः कलध्वाने हंसे पारावते पिके ॥१७॥
कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने ।
मयूरे पीतसारे* च स्यात् खण्डपरशौ † पुमान् ॥१८॥
कालपृष्ठं कर्णचापे पुंसि कङ्कविहङ्गमे ।
स्याद् दन्तशठो जम्बीरे कपित्थे कर्मरङ्गके ॥१९॥
नागरङ्गेऽपि च पुमान् स्याच्चाङ्गेर्यान्तु योषिति ।
पूतिकाष्ठन्तु सरल-देवदारुमहीरुहोः ॥२०॥
सूत्रकण्ठः पुमान् विप्रे खञ्जरीटकपोतयोः ।
हारिकण्ठः पिके पुंसि हारान्वितगले त्रिषु ॥२१॥

ठान्तवर्गः समाप्तः ।

---

## डैककम् ।

डः पुमान् बाड़वाग्नौ स्याड् डाकिन्यां स्त्री निगद्यते ।

## डद्विकम् ।

अण्डं मुष्के च पेश्यां स्यादिड़ा तु बुधयोषिति ॥१॥
सौरभेय्याञ्च वचने वसुमत्यामपि स्त्रियाम् ।
काण्डः स्तम्बे तरुस्कन्धे वाणेऽवसरनीरयोः ॥२॥

---

* पीतनावे च इति वा पाठः । † खण्डपरशुः शिवः ।

